धो नित्यप्राप्तानुवादः । दुष्टकर्मप्रतिषेधार्थन्तु सूत्रम् । त्रैवर्णिकस्यैवोपनयनविधानेन शूद्रस्य तदप्राप्तेरिति हरदत्तेनोक्तम् । तदनुवादफलन्तु ब्राह्मणादिभ्यः शूद्रायामुत्पन्नस्य ब्राह्मणादिजन्यत्वेऽप्युपनयनाभावबोधनम् । बौधायनोऽपि—'अथातो गर्भाष्टमेषु वर्षेषु ब्राह्मणमुपनयीत, गर्भैकादशेषु राजन्यं, गर्भद्वादशेषु वैश्यमाषोडशाद्ब्राह्मणस्य नात्ययः इत्येवमेवेतरयोर्द्वाविंशतिश्चतुर्विंशतिश्चाथाऽपि काम्यानि भवन्ति, सप्तमे ब्रह्मवर्चसकाममष्टमे आयुष्कामं, नवमे तेजस्कामं, दशमेऽन्नाद्यकाममेकादशे इन्द्रियकामं, द्वादशे पशुकामं, वसन्ते ब्राह्मणमुपनयीत, ग्रीष्मे राजन्यं, शरदि वैश्यं, वर्षासु रथकारं सर्वानेव वा वसन्ते' इति । रथकारः पूर्वमेव निरूपितः । आपस्तम्बोऽपि–'गृह्ये गर्भाष्टमेषु ब्राह्मणानुपनयीत, गर्भैकादशेषु क्षत्रियं, गर्भद्वादशेषु वैश्यं वसन्तो ग्रीष्मः शरदृतवो वर्णानुपूर्व्येण' इति । गर्भाष्टमेषु गर्भषष्ठसप्तमाष्टमेषु विप्रस्य क्षत्रस्य नवमदशमैकादशेषु वैश्यस्य दशमतस्त्रिष्विति तदर्थं इति सुदर्शनः । धर्मप्रश्ने आपस्तम्बः-'आषोडशाद्ब्राह्मणस्यानात्यय आद्वाविंशात्क्षत्रियस्याचतुर्विंशाद्वैश्यस्य' इति । आङभिविधौ, मर्यादायामिति मिताक्षरा ।

सावित्री पतिता यस्य दश वर्षाणि पञ्च च ।
समतिक्रान्तकालाश्च पतिताः सर्व एव ते ॥
सशिखं वपनं कृत्वा व्रतङ्कुर्यात्समाहितः ।
एकविंशतिरात्रञ्च पिबेत्प्रसृतियावकम् ॥
हविषा भोजयेच्चैव ब्राह्मणान् सप्त पञ्च वा ।
ततो यावकशुद्धस्य तस्योपनयनं स्मृतम् ॥

इति । यमस्मृतौ पञ्चदशोर्ध्वं पतितसावित्रीकत्वोक्तेरिति तदाशयः । अभिविधिपक्षेऽपि षोडशग्रहणङ्गर्भत इति कैश्चिद्विरोधः । अत्ययोऽतिक्रमः स च प्रकरणादुपनयनस्येति गम्यते । तदभावोऽनात्ययः । आर्षो दीर्घः,आङो वा दीर्घः । अधिकमप्याह–'यथा व्रतेषु

समर्थः 'स्याद्यानि वक्ष्यामः'। वक्ष्यमाणव्रतेषु यथा समर्थः स्यात्तावत्कालं प्रतीक्षा कार्येति तदर्थः। एवञ्च पूर्वमेव सामर्थ्येऽग्रवर्षातिक्रमेऽपि वक्ष्यमाणं प्रायश्चित्तं भवत्येव। एवं षोडशादिभ्य ऊर्ध्वं कियत्कालमसमर्थानां यदा सामर्थ्यन्तदा विनैव प्रायश्चित्तमुपनयनम्। सामर्थ्योत्तरमपि किञ्चित्कालातिक्रमे प्रायश्चित्तं पूर्वमेव।

तत्प्रायश्चित्तमाह—'अतिक्रान्ते सावित्र्या ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेत्'। यस्य यः सावित्र्याः कालस्तदतिक्रमे ऽयवयवविद्याध्येतृसम्बन्धि ब्रह्मचर्यमग्निसेवाध्ययनगुरुशुश्रूषातिरिक्तं सर्वं ब्रह्मचारिधर्मं चरेत्। ऋतुमिति कालविधानं, तेन ऋत्वारम्भे प्रायश्चित्तारम्भः। अन्ये तु वेदब्रह्मचर्यमित्येव सिद्धे त्रैविद्यकमित्युक्त्या प्रतिवेदं ऋतुमिति ऋतुत्रयन्तदित्याह।

अथोपनयम्। एवं चरितव्रत उपनेतव्यः। ततः संवत्सरमुदकोपस्पर्शनम्। तत उपनयनोत्तरं संवत्सरस्नानम्। शक्तस्य त्रिषवणमशक्तस्य यथाशक्ति। तच्च वक्ष्यमाणपावमान्यादिभिरिति हरदत्तः। तूष्णीमित्यन्ये।

अथाध्याप्य इति। अत्रैव विषये वसिष्ठः आहोद्दालकव्रतम्। 'पतितसावित्रीक उद्दालकव्रतञ्चरेत द्वौ मासौ यावकेन वर्तयेत् मासं पयसाऽऽमिक्षयाऽष्टरात्रं, घृतेन षड्रात्रम्, अयाचितेन त्रिरात्रम्, अभक्षोऽहोरात्रमुपवसेदश्वमेधोवभृथङ्गच्छेत् व्रात्यस्तोमेन वा यजेत'-इति। उपवसनमश्वमेधावभृथमिति पाठान्तरम्। याज्ञवल्क्यः—

आषोडशादाद्वाविंशाच्चतुर्विंशाच्च वत्सरात्।
ब्रह्मक्षत्रविशां काल औपनायनिकः परः॥
अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः।
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः॥

इति। मनुरपि—

आषोडशाद्ब्राह्मणस्य सावित्री नातिवर्तते।

आद्वाविंशात्क्षत्रबन्धोराचतुर्विंशतेर्विशः॥
अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः॥

इति। व्रात्यसंज्ञाप्रयोजनञ्च व्रात्यानां याजनङ्कृत्वा त्रीन्कृच्छ्रा-नाचरेदिति। त्रीन् कृच्छ्रानाचरेद्व्रात्ययाजकोऽभिचरन्नपीति मनुया-ज्ञवल्क्याद्युक्तप्रायश्चित्तप्राप्तिरिति तद्व्याख्यातारः। तथा शातात-पोऽपि—'पतितसावित्रीकान्नोपनयेन्नाध्यापयेत् य एतानुपनप-येदध्यापयेत् याजयेद्वा स उद्दालकव्रतश्चरेत्' इति। ए-तदुद्दालकव्रतङ्कामकृते इति मिताक्षरा। अत्र मुख्योपनेतुरभावेन व्रतसमर्थस्याऽष्टवर्षाद्युपनयनकालातिक्रमे मासं पञ्चगव्याशनं, चान्द्रायणं, मासं पयोव्रतं वा पराको वा अनापद्यतिक्रमे उपन-यीत केषूक्तं मानवं त्रैमासिकं पञ्चदशतः षोडशतो वा व-र्षादूर्ध्वं कियतः कालस्यातिक्रमे उद्दालकव्रतव्रात्यस्तोमौ बोध्या-विति निबन्धकृतः। यत्तु शङ्खेन गोदानसहितं चान्द्रायणमुक्तन्तदुद्दाल-कव्रतसमानविषयम्। उद्दालकव्रतशङ्खोक्तयोः सपाददशधेनवः। देश-विप्लवादिना कालातिपाते सशिखं वपनङ्कृत्वेत्यादियमोक्तं द्रष्टव्यम्। आलस्यादिना कालातिपाते एव द्विगुणं शङ्खोक्तं वसिष्ठोक्तं वा। कथ-मप्युपनेतुरभावेन कालातिपाते मनुविष्णू—

येषां द्विजानां गायत्री नानूच्येत यथाविधि।
तांश्चारयित्वा त्रीन्कृच्छ्रान् यथाविध्युपनाययेत्॥

इति। पित्रादीनामप्यनुपेतत्वे आहाऽऽपस्तम्बः—'अथ यस्य पिता पितामह इत्यनुपेतौ स्यातान्ते ब्रह्महसंस्तुताः'। यस्य माणवकस्य, जा-तावेकवचनम्। येषां माणवकानां पिता पितामह इत्यनुपेतौ स्व-यञ्च ते तथाविधा माणवका ब्रह्महसंस्तुता ब्रह्महण इत्येवङ्कीर्तिताः। अस्मिंस्तच्छस्तद्धर्मप्राप्त्यर्थः। ततश्च यथा ब्रह्महसहिते गृहे नाध्येय-यमेवं तैरपि तत्प्रायश्चित्तप्राप्त्यर्थस्तच्छब्द इति हरदत्तः। एवञ्च ब्रह्म-

हत्याप्रायश्चित्तेन समुच्चयो वक्ष्यमाणस्येति लभ्यते । अत्र व्याख्याने स्वयञ्चेत्यत्र यथाकालमनुपेत इति शेषः । 'यस्य प्रपितामहादि' इति सूत्रे हरदत्तेन तथाव्याख्यानात् । 'तेषामभ्यागमनं भोजनं विवाहमिति च वर्जयेत्' । अभ्यागमनं आभिमुख्येन गमनम् । मातापितृपुत्रदारशरीररक्षणार्थमपि वर्जयेत् । रक्षायाः सर्वतः प्रतिग्राह्यत्वे पितृतस्तत्प्रतिग्रहे निषेधः । दुष्कुलकारिणामप्युद्यतं भोजनं यद्यप्यत्याज्यन्तथाप्यस्य तादृशमपि त्याज्यम । दुष्कुलादपि स्त्रीरत्नस्य ग्राह्यत्वं यद्यपि, तथाप्येतदीयकन्याया अपि विवाहो वर्ज्यः । तेषामिच्छतां प्रायश्चित्तम् । इच्छतामिति वचनान्न बलात्कारेण प्रायश्चित्तम् ।

अत्र वदन्ति आद्येऽतिक्रमे प्रायश्चित्तपदमनुक्त्वाऽत्र प्रायश्चित्तमित्युक्त्या ब्रह्महपदस्य च पूर्वं प्रयोगात्तत्प्रायश्चित्तमित्यर्थः । अत एव तेषामिच्छतां ब्रह्मचर्यमिति नोक्तम् । एतदभिप्रायेणैव हरदत्तेनातस्मिंस्तच्छब्दप्रयोगः प्रायश्चित्तप्राप्त्यर्थ इति व्याख्यातम् । ब्रह्मचर्यन्तु अधिकमिति । यथा प्रथमेऽतिक्रमे ऋतुरेवं संवत्सरः । यथा प्रथमातिक्रमे ब्रह्मचर्यस्य ऋतुः काल एवमत्रातिक्रमे संवत्सर इत्यर्थः । अत्र 'अथ यस्य' इति सूत्रे पितामह इत्यसमस्तोपादानात्पितृमात्रनुपनीतत्वे इदं पितामहस्यापि तत्त्वे द्विगुणमेतत् , द्विगुणब्रह्महत्याप्रायश्चित्तेन सह । अत्र संवत्सरं ब्रह्मचर्यमिति सूचितम् । एवञ्चात्र पितृमात्रस्याऽनुपनीतत्वे त्रिवत्सरमित्यादि बोध्यमिति वदन्ति ।

अथोपनयनम् । तत उदकोपस्पर्शनं स्पष्टम् । तत्र विशेषमाह-'प्रतिपुरुषं संख्याय संवत्सरान् यावतोऽनुपेताः स्युः' । यदि पितैवानुपेतस्तदा संवत्सरमेकं, यदि पितामहोऽपि ततो द्वौ, अथ स्वयमपि यथाकालमनुपेतस्ततः संवत्सरानिति हरदत्तः । स्नाने मन्त्रा व्याहृतयः । पक्षान्तरेण मन्त्रान्तराण्यपि धर्मप्रश्ने द्रष्टव्यानि ।

अथाध्याप्यः । स्पष्टम् । अत्र यस्येत्युपक्रमे एकवचनमन्तेऽप्यथाध्याप्य इति एकवचनम् । मध्ये तु ते ब्रह्महसंस्तुतास्तेषा-

मभ्यागमनमित्यादि बहुवचनं, तत्रोपक्रमोपसंहारानुसारेण एकस्यैव प्रायश्चित्तोपनयनाध्यापनानि न पित्रादेः। बहुवचनञ्च माणवकबहुत्वापेक्षम्। जातौ चैकवचनमिति हरदत्तः। युक्तञ्चैतत्, संन्यासोत्तरं गार्हस्थ्यस्येव विवाहोत्तरं ब्रह्मचर्यस्याऽप्राप्त्या तत्प्रसङ्गाभावादिति निरूपयिष्यामः। मध्ये तेषामिति बहुवचनेन पित्रादिसङ्ग्रहभ्रमव्यावृत्त्यर्थमाद्यावन्ते चैकवचनमिति बोध्यम्। 'अथ यस्य प्रपितामहादिनानुस्मर्यं उपनयनं ते स्मशानसंस्तुतास्तेषामभ्यागमनं भोजनं विवाहमिति च वर्जयेत्, तेषामिच्छतां प्रायश्चित्तं द्वादशवर्षाणि त्रैविद्यकं ब्रह्मचर्यञ्चरेत्'।

अथोपनयनं, तत उदकोपस्पर्शनं पावमान्यादिभिरिति। प्रपितामहादि प्रपितामहमारभ्य पितामहः पिता स्वयञ्च यथाकालमनुपेतास्ते तथाविधा माणवकाः स्मशानसंस्तुताः यथा स्मशानस्य सर्वतः शम्याप्राप्तपर्यन्तञ्चाध्ययनन्तथा एषामपि सन्निधौ नाध्येयमित्यर्थः। स्नानं माणवकबहुत्वाभिप्रायेत्यादिभिरित्युक्त्या प्रतिपुरुषं संख्याय संवत्सरानित्येतदप्यत्र द्रष्टव्यमिति सूचयति। अत्रापि बहुवचनं माणवकबहुत्वाभिप्रायेणैकवचनं जातौ। अत्र 'अथ गृहमेधोपदेशनम्' इत्युक्त्या प्रतिपुरुषं संख्यायेत्युक्तेश्च। तेषामिति तत्पदेन यत्परम्परामृष्टमाणवकग्रहणमेवोचितं, न तु पित्रादीनामित्याहुः।

'अथ गृहमेधोपदेशनम्'। गृहमेधो गृह्यशास्त्रं गृहस्थाश्रमश्च नाध्यापनं कृत्स्नस्य वेदस्य न गृह्यमन्त्राणान्तु भवति गायत्रीजपोऽस्य सन्ध्याकाले आशौचिन इव दशवारं स्मरणमात्रम्। तथा च प्रपञ्चसारे—

> जप्यः स्यादिह परलोकसिद्धिकामै—
> मन्त्रोऽयं महिततरो द्विजैर्यथावत्।
> भूदेवा नरपतयस्तृतीयवर्णाः
> सम्प्रोक्ता द्विजवचनेन तत्र भूयः॥

द्विजवचनेन द्विजशब्देनोच्यन्त इति शेषः। तत्र भूयः तेषु मध्ये पुनरित्यर्थः।

तेषां शुद्धकुलद्वयोत्थमहसामारभ्य तन्तुक्रियां
तारव्याहृतिसंयुतां सहशिरोगायत्र्युपास्या परा।
सन्ध्योपासनया जपेन च तथा स्वाध्यायभेदैरपि
प्राणायामविधानतो मतिमता ध्यानैस्तथा नित्यशः॥

इति। अत्र शुद्धकुलेत्याद्युक्तेरनुपनीतजानामयथाकालोपनीतजानाञ्च शुद्धमातापितृजत्वाभावेन तदुपासनानधिकारः सूचितः। स्वाध्यायभेदो ब्रह्मयज्ञः सम्पूर्णप्राणायामे। इतरत्र प्रणवव्याहृतिसंयुता गायत्रीति स्पष्टं तद्विदाम्। भागवतेऽपि सप्तमे—

संस्कारा यत्राऽविच्छिन्नाः स द्विजोऽजो जगाद यम्।
इज्याध्ययनदानानि विहितानि द्विजन्मनाम्॥
जन्मकर्मावदातानां क्रियाश्चाश्रमनोदिताः।

इति। संस्काराः सोपनयना यत्र यद्वंशेऽविच्छिन्ना विच्छेदरहिताः स द्विजः। यमेवंगुणमजो ब्रह्मा वेदो वा द्विज इति जगाद जन्मना विशुद्धकुलेन कर्मणा आचारेण शुद्धानां द्विजन्मनां तद्वंश्यानामिज्यादीनि विहितानि ब्रह्मचर्याद्याश्रमविहिताः क्रियाश्च तेषामेव विहिता इति तदर्थः। एवञ्च व्रात्यानां तज्जन्यानां वा तत्राऽनधिकार इति स्पष्टमेवोक्तम्। महाभाष्येऽपि 'पुंयोगा'दिति सूत्रे उक्तम्—

त्रीणि यस्यावदातानि विद्या योनिश्च कर्म च।
एतच्छिवे! विजानीहि ब्राह्मणत्वस्य लक्षणम्॥

इति। ततो यो निर्वर्तते तस्य संस्कारो यथा प्रथमेऽतिक्रमे, एवंमाचरितप्रायश्चित्तात् गृहस्थीभूताद्यो निर्वर्तते उत्पद्यते तस्योपनयनसंस्कारो यथा प्रथमेऽतिक्रमे ऋतुं त्रैविद्यकं ब्रह्मचर्यं तथा तच्चारयित्वा कार्योऽथाध्याप्य इत्यन्तः। तत ऊर्ध्वं प्रकृतिवत्। ततस्तु यो निर्वर्तते तस्य प्रकृतिवद्यथाप्राप्तं यथाकालमुपनयनङ्क-

तव्यमित्यर्थः । तदग्रे तु न प्रायश्चित्तं नाप्युपनयनं सनूक्तेरिति बोध्यम्। एवमेवैषा स्मृतिः पराशरस्मृतिव्याख्याने माधवेन व्याख्याता। यत्तु 'यस्य प्रपितामहादि' इति सूत्रे प्रपितामहादीनामिति पाठकल्पनं तत्त्वसङ्गतं हरदत्तमाधवादिविरोधात्, अध्येतृसम्प्रदायविरोधाच्च। यत्तु 'यस्य प्रपितामहादि' इति सूत्रं प्रपितामहादारभ्य पूर्वे उत्तरे चेति व्याचक्षते, इदमेवाभिप्रेत्य हरदत्तेन यस्य प्रपितामहस्य पितुरारभ्य नानुस्मर्यते उपनयनं तत्र प्रायश्चित्तं नोक्तमित्युक्त्वा धर्मशास्त्रैस्तु विहितमेवं पूर्वेष्वपीत्युक्तम्। तस्यार्थः धर्मशास्त्रैस्तच्छास्त्रनिबन्धकारैरुक्तरीत्या स्मृतिं व्याख्याय तत्रापि प्रायश्चित्तं विहितमिति वदन्ति तत्तुच्छम्, कात्यायनगृह्यस्मृतिविरोधात्। तत्र हि 'आषोडशाद्ब्राह्मणस्य' इत्यादि आश्वलायनवाक्यसमानार्थकेनैतैर्व्यवहारैरित्यन्तं पठितम्। व्यवहारपदार्थश्चाऽत्र तेषामभ्यागमनमित्यादिरापस्तम्बोक्तः। ततः स आह कालातिक्रमे नियतवत्। अत्र हरिहरादयः-गर्भाधानाद्युपनयनान्तानां कर्मणां कालातिक्रमे नियतवत्। नियतेषु श्रौतेषु विपन्नेषु यद्विहितमनादिष्टविषयं महाव्याहृतिहोमाख्यं सर्वप्रायश्चित्तं तत्कृत्वा तानि कार्याणीत्यर्थ इति। अन्ये तु षोडशादिरूपस्योक्तकालस्यैव कालातिक्रमे इत्यत्र ग्रहणमुचितम्। तत्र तु नेदृशं प्रायश्चित्तमुचितमत्यल्पत्वात्। तस्मान्नियतवदित्यस्य ब्रह्मचारिणो नियतं यद्वेदाध्ययनार्थं ब्रह्मचर्यन्तद्वत्तत्कृत्वोपनयनङ्कार्यमित्यर्थः। तद्वदित्यनेनाऽग्निसेवाऽध्ययनगुरुशुश्रूषात्यागो बाधितः, कालश्चास्यापस्तम्बोक्त एव। एवञ्चातिक्रान्ते सावित्र्याः काले इत्यन्तसमानार्थमिदं, तन्त्रेणाऽस्यार्थरूपपरता चेत्याहुः।

अथाऽनेकपुरुषपतितसावित्रीकविषये आपस्तम्बेन निषिद्धस्योपनयनस्य प्रतिप्रसवं वदन् कियत्पर्यन्तं संस्कार्यतेत्याकांक्षायां नियममाह-'त्रिपुरुषं पतितसावित्रीकाणामपत्ये संस्कारो नाध्यापनञ्च'। त्रिपुरुषमिति "संख्या वंश्येन" इत्यव्ययीभावः। पतितसावित्री-

काणां वंश्यानां त्रयाणां पुरुषाणां यदपत्यश्चतुर्थं तत्र संस्कार उपनयनं भवति, अध्यापनन्तु नेति तदर्थः । चस्त्वर्थे तदधिकपतितसावित्रीकस्य तु न । तदाह हरिहरः–'प्रपितामहस्य पितरमारभ्य चतुर्णां पतितसावित्रीकाणामपत्ये तु न संस्कारः पूर्वनिषेधात्' इति । 'यस्य प्रपितामहादि' इति प्रक्रम्य उपनयनं नाध्याप्य इत्यापस्तम्बोक्तेरस्यायमेवार्थ उचितः । यत्तु कात्यायनसूत्रव्याख्यात्रा गदाधरेण–'तेषामपत्ये संस्कारो नाध्ययनञ्च न' इत्येवमेतत सूत्रं व्याख्यातं हरिहरस्तु मृग्य इति चोक्तं, तदनेन परास्तं पूर्वनिषेधेनैव सिद्धेश्च । स च बहुदोषश्रवणाद्बहुपुरुषं पतितसावित्रीकविषयोऽपि संस्काराभावे अध्यापनाप्रसक्त्या नाध्यापनमित्यस्य वैयर्थ्यापत्तेश्च ।

न च चतुरादिपुरुषपर्यन्तं पतितसावित्रीकाणामपत्ये त्रिपुरुषं पतितसावित्रीकाणामपत्यत्वमप्यस्तीति वाच्यं व्यापकसंख्याव्यवहारविषये व्याप्यसंख्याव्यवहाराभावात् । अत एव न हि त्रिपुत्रो द्विपुत्रव्यपदेशत्वं लभत इति 'अ इ उण्' सूत्रे भाष्ये उक्तम् । अन्यथाऽत्र बहुपुरुषमित्येव वदेत् । एवञ्चैतदेकवाक्यतया 'यस्य प्रपितामहादि' इत्यापस्तम्बस्मृतिरपि त्रिपुरुषं पतितसावित्रीकविषयैव । किञ्च यद्वंश नोपनयनं स्मर्यत इत्येव सिद्धे यस्य प्रपितामहादीति विशिष्योक्तिर्निष्फला । अत एव धर्मशास्त्रस्तु विहितमिति वाक्ये हरदत्तेन तु नाऽरुचिर्बोधिता । तद्बीजन्तूक्तमेव । स्मृत्योरेकमूलकल्पनालाघवानुरोधेनैकार्थ्ये सम्भवति भिन्नार्थत्वमन्याय्यमिति सर्वधर्मशास्त्रनिबन्धकर्तां सिद्धान्तात् ।

अभ्युपेत्याऽपि ब्रूमः–पूर्वे इत्यत्र 'कपिञ्जलाधिकरण'न्यायेन त्रयाणामेव ग्रहणापत्तौ सप्तमस्योपनयनलाभेऽपि तदूर्ध्वस्याष्टमादेरुपनयने मानाभावः । किञ्चायं प्रायश्चित्तविधिर्येषां वंशे उपनयनं स्मर्यते तद्विषये एव, न तु तदस्मरणे । यस्य प्रपितामहादीत्येतद्विषये पावमान्यादिभिः स्नानमित्यर्थके प्रतीके प्रतिपुरुषं संख्याय संवत्सरान्-

त्येतदत्रापि द्रष्टव्यमिति हरदत्तोक्तेः। तदस्मरणे तद्गणनाया असम्भवात्। किञ्च—

जात्युत्कर्षो युगे ज्ञेयः सप्तमे पञ्चमेऽपि वा।
व्यत्यये कर्मणां साम्यं पूर्ववच्चाधरोत्तरम्॥

इति याज्ञवल्क्यस्मृतिविरोधान्न पञ्चमादीनामुपनयनम्। तथा हि सा स्मृतिरित्थं विज्ञानेश्वरेण व्याख्याता। जातयो मूर्द्धावसिक्काद्यास्तासामुत्कर्षो ब्राह्मणत्वादिजातिप्राप्तिः। युगे जन्मनि सप्तमे पञ्चमे, अपिशब्दात् षष्ठे बोद्धव्यः। व्यवस्थितश्चायं विकल्पः। व्यवस्था चेत्थम्—ब्राह्मणेन शूद्रायामुत्पादिता निषादी, सा ब्राह्मणेनोढा दुहितरं काञ्चिज्जनयति सापि ब्राह्मणेनोढाऽन्यामित्यनेन प्रकारेण षष्ठी सप्तमं ब्राह्मणं जनयति। एवं ब्राह्मणेन वैश्यायामुत्पादिता षष्ठी साऽप्यनेन प्रकारेण पञ्चमी षष्ठं ब्राह्मणं जनयति। ब्राह्मणेन क्षत्रियायामुत्पादिता मूर्द्धावसिक्ता साप्यनेन प्रकारेण चतुर्थी पञ्चमं ब्राह्मणं जनयति। एवं शूद्रायां क्षत्रियजोग्रा क्षत्रियेणोढा क्रमेण पञ्चमं क्षत्रियं जनयति। वैश्यायां क्षत्रियजा माहिष्या क्षत्रियोढा क्रमेण पञ्चमं क्षत्रियं जनयति। तथा करणी वैश्योढा पञ्चमं वैश्यमित्यादूह्यम्। तथा कर्मणां वृत्त्यर्थानां व्यत्यये विपर्यासे सप्तमषष्ठपञ्चमेषु तत्साम्यम्। तथा हि ब्राह्मणो मुख्यया वृत्त्याऽजीवन् क्षात्रेण कर्मणा जीवेदित्यनुकल्पः। तेनाऽप्यजीवन् वैश्यवृत्त्या तयाप्यजीवन् शूद्रवृत्त्या। एवं क्षत्रियस्य वैश्यशूद्रवृत्ती अनुकल्पः। वैश्यस्य शूद्रवृत्तिरिति। एवं कर्मणां विपर्यये सति यद्यापद्विमोक्षेऽपि तां वृत्तिं न त्यजति, तदा सप्तमादिजन्मनि साम्यं यस्य हीनवर्णस्य कर्मणा जीवति तत्समानजातिः। तद्यथा ब्राह्मणः शूद्रवृत्त्या जीवन् यदि पुत्रमुत्पादयति, सोऽपि तयैव वृत्त्या जीवन् पुत्रान्तरमित्येवं परम्परायां सप्तमं शूद्रमेव जनयति। वैश्यवृत्त्या जीवन् षष्ठे वैश्यम्। क्षत्रियवृत्त्या जीवन् पञ्चमे क्षत्रियम्। क्षत्रियोऽपि शूद्रवृत्त्या जीवन् षष्ठे शूद्रम्। वश्यै-

वृत्त्या जीवन् पञ्चमे वैश्यं, शूद्रवृत्त्या जीवन् तामपरित्यजन् पुत्रपरम्परया तदत्यागे पञ्चमे शूद्रं जनयति। पूर्ववच्चाधरोत्तरमपि वर्णसङ्करा अनुलोमाः प्रतिलोमाश्च दर्शिताः । तत्र मूर्द्धावसिक्तायां क्षत्रियवैश्यशूद्रैरुत्पादिता अम्बष्ठायां वैश्यशूद्राभ्यां निषाद्यां शूद्रेणोत्पादिता अधराः प्रतिलोमजा इत्यर्थः । एवं मूर्द्धावसिक्त्यम्बष्ठीनिषादीषु ब्राह्मणोत्पादिता माहिष्योग्र्योर्ब्राह्मणक्षत्रियाभ्यां करण्यां ब्राह्मणक्षत्रियवैश्यैरुत्पादिता उत्तरेऽनुलोमजा इत्यर्थः ।

वैश्याच्छूद्रयोस्तु राजन्यान्माहिष्योग्रौ सुतौ स्मृतौ ।

वैश्यात्तु कः उपनयाभावादेव ब्राह्मणादिवृत्तिहीनतया शूद्रवृत्त्यैव जीवनञ्चेति दोषाधिक्याद्स्य पञ्चमे शूद्रताप्राप्त्योपनयनप्राप्त्यभावात् । एवमेवंविधस्य क्षत्रियस्य तुर्ये एव शूद्रता, न हि शूद्रस्य प्रायश्चित्तसहस्रैरप्युपनयनार्हता भवति । न हि शूद्रवृत्त्या जीवतो ब्राह्मणस्यापि सप्तममपत्यमुपनयनार्हमिति कस्यापि सम्मतम् । 'कर्मणां व्यत्यये साम्यम्' इत्यस्य तज्जातिधर्मप्राप्त्यर्थातिदेशरूपत्वात् । एतन्मूलकमेव कात्यायनेन ब्राह्मणविषये चतुर्थस्यैवोपनयनमुक्तन्न पञ्चमादीनाम् । एवञ्च तुल्यन्यायात् क्षत्रियस्य तादृशस्य तृतीयस्यैवोपनयनन्न चतुर्थादेः, वैश्यस्य द्वितीयस्यैव न तृतीयादेः । वस्तुतः क्षत्रियवैश्ययोः प्रथमव्रात्यपुत्रयोरपि नोपनयनार्हतेति प्रागुक्तम् । एतन्मूलकमेव हरदत्तेनापि पञ्चमादेः प्रायश्चित्तं नोक्तमित्युक्तं तदनर्हत्वादिति तदाशयः । एवं जातापत्यानां पितृपितामहप्रपितामहादीनामपि नोपनयनं, 'यस्य प्रपितामहादि' इत्यापस्तम्बोक्तेः 'पतितसावित्रीकाणामपत्यं' इति कात्यायनोक्तेश्च । किञ्चोपनयनं संस्कार आश्रमप्राप्तिद्वारं यथाधानं संस्कारो यज्ञद्वारम् । एवञ्च प्रागेव गृहस्थाश्रमप्राप्तौ तदनुष्ठानवैफल्यं तत्राप्याश्रमाभावादिति दिक् । 'त्रिपुरुषं पतितसावित्रीकाणामपत्ये संस्कारो नाध्ययनञ्च' इति सूत्रान्तरम । 'तेषां संस्कारेप्सुर्व्रात्यस्तोमेनेष्ट्वा काममधीयीरन् व्यवहार्या भवन्ति' इति सूत्रम् ।

तदित्थं व्याचक्षते केचित्—स चतुर्थस्य संस्कारः कथङ्कर्तव्यस्तत्रा
ह—तेषां संस्कारेप्सुर्व्रात्यस्तोमेनेष्ट्वा संस्कारं कुर्यादिति शेषः। सं
स्कार उपनयनं, तेषां पतितसावित्रीकाणां वंश्यानां त्रयाणां पुरुष
णां यान्यपत्यानि तेषां मध्ये यः संस्कारेप्सुः संस्कारं प्राप्तुकाम
स व्रात्यस्तोमेनेष्ट्वा गुरुणाऽऽत्मानं संस्कुर्यादित्यर्थः।

ननु व्रात्यस्तोमैर्यक्ष्यमाणः पृथगग्नीनाधीय यज्ञोपकरणानि च
'य एतेषामध्ययने नाभिक्रान्ततमः स्यादभिजनेन तदभावेऽपि भो
गलाभेन तस्य गार्हपते दीक्षेरन् भक्षांश्चाऽनुभक्षयेयुः' इति छन्दो
गृह्ये उक्तत्वेनोपनयनात्प्राक् कथन्तत्राधिकारः। इष्ट्वा सम्पाद्य अभि
क्रान्ततमोऽतिशयि उत्कृष्ट इति यावत्। भोगो धनम्। अत्यन्तं क्रूरक
र्मा यस्तेषां स वा गृहपतिः' इति कात्यायनसूत्रे उक्ते व्रात्यस्तोमार्थमेव
ऽऽधानेन पृथगग्नीनुत्पाद्य विद्यया धनेन कुलेन क्रूरकर्मणा चासम्पन्न
स्य गृहपतेरग्निषु त्रयाणां त्रयाणां स्वाग्नीनसान्निचाय्य हुत्वा व्रा
त्यस्तोमदीक्षाङ्कुर्युः, इतरे च व्रात्यास्तु गृहपतेर्भक्षमनु सोमा
भक्षयेयुरिति तदर्थः। मानवेऽपि सूत्रे अग्नीनाधाय गृहपतेरग्नि
संयुज्य यजेरन्निति पूर्वोक्ताः पतितसावित्रीकाः व्रात्याः। अन्येऽ
द्विजातिकर्महीना विहिताकर्तारो निषिद्धकर्तारः क्रूरकर्माणो व्र
त्याः।(?)एतद्धि ताण्डिब्राह्मणे स्पष्टम्। अयञ्च गणयज्ञो गणस्त्रयस्त्रिंशत
म्। 'त्रयस्त्रिंशद्दिडान्प्राध्वर्यन्' इति ताण्डिश्रुतेः।(?) 'तेषां ते प्रत्येकं त्रयस्त्रिं
शतं त्रयस्त्रिंशतं गा दक्षिणं ह्यः ऋत्विगन्यः' (?)इति ताण्डिसूत्रम्। '
व्रात्यानन्ये ब्राह्मणा ऋत्विजो भूत्वा याजयेयुः' इति देवयाज्ञिकः। 'इ
गावो व्रात्येभ्यो देया येस्मा एतद्ददति तस्मिन्नेव मृजान्नवन्तीति स
धारण्योक्तेः' (?)इति ताण्डिब्राह्मणभाष्यम्। एवञ्चान्ये व्रात्या एवा तत्र ऋत्वि
ज इति लभ्यते तत्कथमस्मिन्ननुपनीतानामधिकार इति चेन्न, वचन
देव तेषामप्यधिकारात्। तथा च कात्यायनगृह्यकारिकाकृत्—

अथार्थस्यानधीतस्य स्यादाधानं तदर्थवत्।

इति। इदमनुपेतस्याप्युपलक्षणं तदुपयोग्यध्ययनमपि तेषां भवति त्रिवर्षस्य पित्रादिक्रियोपयोगिमन्त्राध्ययनवत्। निषादस्य च अवकीर्णिनो गर्दभेज्यो लौकिके वैतानिकेषु सर्वमित्यधिकारे कात्यायनोक्तेरिति देवयाज्ञिकः। कर्कस्तु तेषां लौकिके शावे च व्रात्यस्तोमाद्वा अपत्नीकस्यानधीतवेदस्याकृताधानस्यावकीर्णी पशुश्च तद्वदिति। षाष्ठन्यायेन वचनादधिकारो लौकिकाग्नौ च स इति वृद्धशङ्करभट्टाश्च। कात्यायनस्मृतावववकीर्णिनो गर्दभेज्येति अनाहिताग्निकर्तृककर्मोपलक्षणमिति तदाशयः। युक्तश्चैतत् स्मृतेर्न्यायसिद्धार्थत्वलाभात्। ते च व्रात्यस्तोमाश्चत्वारस्तेषामितिकर्तव्यतास्तदधिकारिणश्च कात्यायनसूत्रछन्दोगसूत्रताण्डिब्राह्मणेषु स्पष्टाः। संस्कृतानामपि तेषां पूर्वं निषिद्धमध्ययनं पुनराह–'काममधीयीरन् व्यवहार्य्या भवन्ति' इति वचनादिति व्रात्यस्तोमेनेच्छेत्यनुवर्तते। तेनैव पुनरिच्छा कामं वेदमवेदमधीयीरन्नित्यर्थः। व्रात्यस्तोमेन पतिता अपि व्यवहार्या भवन्ति अध्यापनादियोग्या भवन्तीति वचनात् श्रुतेरित्यर्थः। 'एतेन पाप्मनो निधिमुच्यते' इति व्रात्यस्तोमं प्रक्रम्य ताण्डिब्राह्मणोक्तेः 'व्रात्यस्तोमेन यजेत पुनस्सवनमायाति' इति बौधायनगौतमादिधृतश्रुतेश्च। तपाशूतेषां तत ऊर्ध्वं मुञ्जीनापि चैतान् कामं याजयेत्' इति छान्दोगसूत्राच्चेति वदन्तस्तदयुक्तं याज्ञवल्क्येन प्रथमेऽतिक्रमे एव तदुक्तेः। अत एव विज्ञानेश्वरेण याज्ञवल्क्यमन्वादिवचांस्युदाहृत्य पित्रादीनामनुपेतत्वे त्वापस्तम्ब आहेत्युक्तम्। तस्मादापस्तम्बोक्तप्रायश्चित्तेनोपनयनसंस्कारः, अध्ययनाधिकार एव तु व्रात्यस्तोमेन। सूत्रार्थस्त्वेवं–तेषां पतितसावित्रीकापत्यानां मध्ये ये संस्कारेप्सवो वेदाध्ययनजसंस्कारप्राप्तिकामा इति। जातावेकवचनम्। व्रात्यस्तोमेनेष्ट्वा काममधीयीरन् इत्यर्थः। शिष्टः प्राग्वदिति। इतरे तु सावित्रीपतितसंज्ञिकत्वं पतितसावित्रीकसंज्ञाकत्वं व्रात्यसंज्ञकत्वञ्च षोडशाद्यूर्ध्वमनाचरितापस्तम्बोक्तव्रतानां जातोपनयनानामेव।

अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः।

सावित्रीपतिता व्रात्याः—

इति याज्ञवल्क्यवाक्ये अत ऊर्ध्वमापस्तम्बोक्तप्रायश्चित्तानुष्ठानं विन संस्कृता अपि ते व्रात्यस्तोमानुष्ठानं विना सावित्रीपतितसंज्ञा व्रा त्यसंज्ञाश्चाऽत एव सर्वधर्मबहिष्कृता इत्यर्थः । सावित्रीपतिता इ त्यस्य स्वकालात्पतिता सावित्री येषामित्यर्थः । आहिताग्न्यादित्वा त्परनिपातः पतितशब्दस्य । अत एवार्थे पतितसावित्रीका इत्यपि साधु । अत एव मनुवाक्ये—

अत ऊर्ध्वं पतन्त्येते यथाकालमसंस्कृताः ।
सावित्रीपतिता व्रात्या सर्वकर्मविगर्हिताः ॥

इत्यत्र यथाकालमित्युक्तेः । तेनाऽयथाकालं संस्कृता इति लभ्य ते । अत एव कथमप्युपनेत्रभावेन कालातिपातकृतव्रात्यताया निब न्धोदाहृते मनुविष्णुवाक्ये

येषां द्विजानां गायत्री नानूच्येत यथाविधि ।
तांश्चारयित्वा त्रीन्कृच्छ्रान् यथाविध्युपनाययेत् ॥

इत्यस्मिन् उभयत्रापि यथाविधीत्युक्तं तन्न, विधिश्च शास्त्रोक्तकालि कत्वरूपः पूर्वार्द्धे । तेनाकाले उक्तेत्यर्थलाभः । उत्तरार्द्धे यथाविधीत्यस्य पूर्वतनोपनयनस्याऽशास्त्रीयत्वात् । पुनर्मुख्योपनयनविध्युक्तप्रकारेणे त्यर्थः । अत एव 'यस्य पिता पितामह इत्यनुपतौ' इति सूत्रे इत्यनु पेतावित्युक्तमिति प्रकारे, उक्तकालिकत्वेन प्रकारेणानुपनीतावित्य र्थः । तेनाकाले षोडशाद्यूर्ध्वप्रकृतप्रायश्चित्तावुपेतौ इत्यर्थलाभः । अत्र सूत्रेऽतिक्रान्ते सावित्र्या ते ब्रह्महसंज्ञका इत्यर्थः । अत एव 'यस्य पिता पितामहादि' इति सूत्रे स्वयञ्च यथाकालमनुपेत इत्युज्वलायां व्या ख्यातम् । युक्तञ्चैतत्, अन्यथा त्रैवर्णिकस्य त्रयाणामाश्रमाणां क्रमि कत्वेन वेदाध्ययनफलकब्रह्मचर्याश्रमस्योपनयनं विना सम्भवेन त त्संस्कारं विना ब्राह्मणत्वाब्राह्मणत्वाद्यनभिव्यक्त्या विवाहासम्भवेन पुत्राद्युत्पत्तेरेवासंभवात् । यस्यां कस्याञ्चित्पुत्राद्युत्पत्तौ तु तत्र त्रै

वर्णिकत्वसन्देह एव। अत एवोपनयनानन्तरं ब्रह्मचर्यं सर्वेषां समानमित्यापस्तम्बः। 'सर्वेषां गृहस्थवानप्रस्थयतीनां तं विना कस्याप्याश्रमस्याप्रवृत्तेः' इति हरदत्तः। बौधायनोऽपि—

नास्य कर्माणि कुर्वन्ति किञ्चिदामौञ्जबन्धनात्।
वृत्त्या शूद्रसमो ह्येष यावद्वेदे न जायते॥

इति। अत एव—

वेदं व्रतानि वा पारं नीत्वा ह्युभयमेव वा।
अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्॥

इति याज्ञवल्क्येन ब्रह्मचर्याश्रमानन्तरमेव विवाह उक्तः। ब्रह्मचर्याश्रमपरिग्रहश्च उपनयनं विना नेति ततः प्राग्विवाहाप्रसक्तिः। अविप्लुतब्रह्मचर्यः अस्खलितब्रह्मचर्यः। तत्स्खलने तु तत्स्खलननिमित्तप्रायश्चित्तपूर्वमेव विवाहः। मनुरपि—

गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि।
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम्॥

तथा—

ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः।
एते गृहस्थप्रभवाश्चत्वारः पृथगाश्रमाः॥
सर्वेऽपि क्रमशस्त्वेते यथाशास्त्रं निषेविताः।
यथोक्तकारिणं विप्रं नयन्ति परमाङ्गतिम्॥

इति। गृहस्थप्रभवत्वं तदुपाजीवित्वम्। अश्वस्तनवृत्त्यादेर्गृहस्थस्यापि गृहस्थोपजीवित्वाच्चतुर्णान्तद्विशेषणम्। त(?)वामस्ते येन गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थमिति गार्हस्थ्योत्तरं ब्रह्मचर्याश्रमोक्तेर्विरोधः, तस्योद्देश्यमात्रे तात्पर्येण क्रमे तात्पर्याभावात्। अत एव तदग्रे तेषु सर्वेषु यथोपदेशमव्यग्रो वर्तमानः क्षेमं गच्छतीत्युक्तम्। तत्र यथोपदेशमित्यस्य मन्वाद्युक्तक्रमोपदेशमनतिक्रम्येत्यर्थः।

तथा च दक्षः—

त्रयाणामानुलोम्यं स्यात्प्रातिलोम्यं न विद्यते ।
प्रातिलोम्येन यो याति न तस्मात्पापकृन्नरः ॥

इति प्राह। त्रयाणामिति ब्रह्मचर्योत्तरेषाङ्ग्रहणम् । ब्रह्मचर्यस्तु सर्वेषां समानत्वेनेत्यावश्यकत्वान्न ग्रहणम्। यद्वा त्रयाणां ब्रह्मचारिगृहस्थवानप्रस्थानामानुलोम्यं क्रम एव लगतु पूर्वपूर्वानुष्ठानं विनोत्तरोत्तरोनुष्ठानम्। तदाह-'प्रातिलोम्यन्न विद्यते' इति। चतुर्थस्य संन्यासस्य तु न नियमः। यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वेति जाबालश्रुतेरित्यर्थः । कात्यायनवाक्येऽपि पतितसावित्रीकाणामपत्ये संस्कार उपनयनं भवति आपस्तम्बोक्तं प्रायश्चित्तपूर्वकम् । नाध्यापनन्तु इत्यर्थः। एकद्विपुरुषपतितसावित्रीकविषये तदीयस्यैवाऽनुष्ठेयत्वात्। तेषां मध्ये यः कश्चिन्माणवको वेदाध्ययनकृतसंस्कारं प्राप्तमिच्छुर्भवति। जातावेकवचनम्। 'ते व्रात्यस्तोमेनेष्ट्वा काममधीयीरन् व्रात्यस्तोमयष्टारो व्यवहार्य्या भवन्ति' इति वचनात् श्रुतेरित्यर्थः। यस्य तूपनयनमेव नास्ति तस्य कदाचिदुपनीतत्वभ्रमेण विवाहेऽपि तदपत्ये न प्रायश्चित्तप्रवृत्तिर्नापि संस्कारः त्रैवर्णिकत्वहानेः, असंस्कृतमातापितृजत्वात्। किञ्च 'व्यत्यये कर्मणां साम्यम्' इति सकलब्राह्मणसंस्कारवतां वृत्तिमात्रेण समस्य शूद्रतोक्ता। तेन न्यायेनासंस्कृतजन्यस्य द्वितीयस्यैव शूद्रवृत्तिर्युक्ता। अत एव मनुना व्रात्योत्पन्नस्य प्रतिलोमसङ्करेषु कथनं विना प्रायश्चित्तम्। अतिक्रान्ते काले उपनयनवतां सर्वधर्मबहिष्कृता इति स्मृत्या सकलद्विजातिकर्महान्या शूद्रवृत्तेरेव प्राप्त्या च पञ्चमस्य शूद्रतैव। एतन्मूलकमेव कात्यायनापस्तम्बाभ्यां चतुर्थस्यैवोपनयनमुक्तं न पञ्चमादीनामित्याहुः। एवञ्चेदशाविप्राणामप्युपनयनाभावस्सिद्धः। अत एव 'ऐन्द्राग्नं पुनरुत्सृष्टमालभेत त्रिपुरुषा सोमपीथिनः आश्विनं धूम्रललाममालभेत यो दुर्ब्राह्मणः सोमं पिपासेत्' इति श्रुतिश्चतुर्थपुरुषस्यैव प्रायश्चित्तेन

सोमपानमाह न पञ्चमादेरधिकप्रायश्चित्तानुक्तेः । गोभिलोऽपि—

सोमेन यक्ष्यमाणस्य यस्य पित्रादयस्त्रयः ।
नेजिरे सोमयागेन स स्याद्विच्छिन्नसोमकः ॥
आलभत स ऐन्द्राग्नमवशीर्णगवं पशुम् ।
यस्य वेदश्च वेदी च विच्छिद्येते त्रिपूरुषम् ॥
स वै दुर्ब्राह्मणो नाम यश्चैव वृषलीपतिः ।
आलभेताश्विनं धूम्रललामं सत्वजं पशुम् ॥

इति। अत्र दुर्ब्राह्मण इति ब्राह्मणपदोपादानादीदृशान्यवर्णस्य सोमाभाव एवेति बोधितः। कार्ष्णाजिनिः—

अनाहिताग्नौ पित्रादौ यक्ष्यमाणः सुतो यदि ।
स हि व्रात्येन पशुना यजेत्तन्निष्कृताम्यायतु(?) ॥

इति। तत्र पित्रादावित्यस्य पितृपितामहप्रपितामहेष्वित्यर्थः। अधिकृतस्यानाहिताग्नित्वे गोवधोक्तव्रतचतुष्टयं वत्सरादूर्ध्वमापदि शक्त्यपेक्षया योज्यमाना यदि मानवं त्रैमासिकमिति मिताक्षरा। वत्सरादर्वाक्तु कार्ष्णाजिनिः—

काले त्वाधाय कर्माणि कुर्याद्विप्रो विधानतः ।
तदकुर्वंस्त्रिरात्रेण मासि मासि विशुद्ध्यति ॥

तथा—

कृतदारो गृहे ज्येष्ठो यो नादध्यादुपासनम् ।
चान्द्रायणञ्चरेद्वर्षं प्रतिमासमहोपि च ॥

इति। द्विपुरुषाः सोमपीथीनोऽप्यैन्द्राग्न एवोक्तः कात्यायनेन। 'ऐन्द्राग्नमपुनरुत्सृष्टमालभ्य द्विपुरुषाः सोमपीथिनः' इति। द्विपुरुषाः सोमपीथिनो यजमानस्य तमालभ्य सोमो भवतीत्यर्थस्तथाशाखान्तरे श्रवणात् इति व्याख्यातारः। यस्य पिता पितामहो वा सोमपीथी स ऐन्द्राग्नमिति शाखान्तरे पाठात्। एकपुरुषाः सोमपीथिनोऽप्ययन-

श्चैवमुत्तरोत्तरं प्रायश्चित्ताधिकार्यादागमिष्यति तदा त्रेतापरिग्रहः

सन्न्यासश्च न कर्तव्यो ब्राह्मणेन विजानता।

इति। यावद्वर्णस्य व्रात्यतान्यायेनात्रावश्यकत्वादिदमनुचितमि

वाच्यम्। न च पुरुषीयसोमपानाभावप्रयुक्तस्मार्तप्रायश्चित्तेन स

हाऽस्यानुष्ठानेनादोषात्। एवञ्च पितर्यसोमपे यत्तदधिकं पितामहे त

दृशे तदधिकं च प्रपितामहे तादृशे इति विशेषात्। तस्य च व्रात्यताविषं

आपस्तम्बोक्तवत् कल्पना द्रष्टव्या। यथा च शुद्धिः 'पूतो मेध्यो विपाप्मा

इति बौधायनवचनेनाऽपतनीयानां पतनीयानां वा कर्मणां स्मार्तप्रायश्चि

कृत्वा कूष्माण्डीहोमः कार्य इति श्रौतसर्वस्वादावुक्तम्। तद्वत्स्मार्त

प्रायश्चित्तेन यथावदाचरितेन शुद्धोऽप्यात्मानमपूतं मन्यते स

कूष्माण्डीहोमैः पूतः। अत एव विपाप्मा मेध्यो यज्ञार्हस्तदधिका

रीति तदर्थः। पित्रादिदोषेणोत्तरोत्तरं पुत्रस्याप्यधिकदोषवत्त्वाया(?)

व्रात्यतासूत्रे आपस्तम्बेनोक्तत्वात्।

देशं कालं वयः शक्तिं पापञ्चापेक्ष्य यत्नतः।

प्रायश्चित्तं प्रकल्प्यं स्याद्यत्र चोक्ता न निष्कृतिः॥

इति याज्ञवल्क्योक्तेः। श्रौतस्मार्तत्यागवेदत्यागयोरुपपातकत्वेऽपि

'उपपातकमभ्यस्तं महापातकवदेव' इति स्मृत्याऽऽत्यन्तिकस्य तस्य

पतनहेतुत्वात्। अस्तु वा तत्र यथाकथञ्चित् सर्वथा चतुष्पञ्च

पुरुषाः सोमपीथिनः। चतुष्पञ्चपुरुषं वेदमुच्छेदवन्तो दुर्ब्राह्मणस्य

वा तत्र यथाधानादिसंस्कार इति सिद्धम्। तन्न्यायेन चतुर्थस्यै

वोपनयनानुष्ठानं, न पञ्चमादेरित्यभिप्रायेणैव कात्यायनीयापस्तम्बाभ्या

तथोक्तम्। संप्रत्यग्निहोत्राद्यननुष्ठाननिबन्धनव्रात्यता तु नास्ति। तथा

च संन्यासपद्धतौ व्यासः—

चत्वार्यब्दसहस्राणि चत्वार्यब्दशतानि च।

कलेर्यदा गमिष्यन्ति तदा त्रेतापरिग्रहः॥

सन्न्यासश्च न कर्तव्यो ब्राह्मणेन विजानाता।

इति।

याबद्वर्णविभागोऽस्ति यावद्वेदः प्रवर्तते।
अग्निहोत्रञ्च सन्न्यासं तावत्कुर्यात्कलौ युगे॥

इति देवलाच्च। अत्र वर्णविभागो नाम सङ्करेभ्यो वर्णानां पृथक्करणम्। न च तदधुनास्ति नापि वेदस्य नियमाध्यापनरूपाप्रकर्षेण वृत्तिरस्ति अन्यस्य वर्णविभागपदार्थस्य दुर्वचत्वात्। क्षत्रियाणां सर्वथाऽभावेन तद्घटितविभागासम्भवात्। भारते वनपर्वणि—

नाशुचिर्नाप्यनिर्णिक्तपादो
नाब्रह्मविज्जुहुयान्नाविपश्चित्।
बुभुत्सवः शुचिकामा हि देवा
नाश्रद्दधानाद्धि हविर्जुषन्ति॥
नाश्रोत्रियं देवहव्ये नियुज्या-
न्मोघं पुरा सिञ्चति तादृशो हि।
अपूर्वमश्रोत्रियमाह तार्क्ष्य!
न वै तादृक् जुहुयादग्निहोत्रम्॥

अनिर्णिक्तपादः अप्रक्षालितपाणिपादः अनाचान्तश्च। अब्रह्मवित् वेदं पठतोऽर्थतश्चाविद्वान्। अविपश्चिद्वेदादधिगतार्थस्यानुभवहीनः। अनेन तयोर्विहीनत्वं सूचितम्। बुभुत्सवः परिचितं ज्ञातुमिच्छवः। ऋत्विगप्येवंविध एवेत्याह नाश्रोत्रियमिति। देवहव्ये यज्ञादौ, मोघं निष्फलं, सिञ्चति जुहोति। पुरा शीलगोत्रादिज्ञानात्प्राक्। अश्रोत्रियपदार्थमाह अपूर्वमश्रोत्रियमिति। अपूर्वमज्ञातकुलशीलमाह-वेद इति शेषः। ईदृशस्यैवाग्निहोत्राधिकारो नान्यस्येति भावः।

अर्द्धाधानं स्मृतं श्रौतस्मार्ताग्न्योस्तु पृथक्कृतिः।
सर्वाधानं तयोरैक्यकृतिः पूर्वयुगाश्रिता॥

इति लौगाक्षिवाक्ये पूर्वयुगानि द्वापरान्तानि तदाश्रितेत्यर्थः। कलावर्द्धाधानमेव तदपि चतुःशताधिकचतुःसहस्रवर्षपर्यन्तम्।

श्राद्धं प्रकृत्य--

त्रिषु वर्णेषु कर्तव्यं पाकभोजनमेव तु ।
शुश्रूषामभिपन्नानां शूद्राणाञ्च वरानने ॥

इति पाकश्राद्धमुक्तम् । तच्छूद्रायां द्विजोत्पन्नविषयमिति केचित्। युक्तन्तु तस्मिन् शूद्रत्वाभावात् । 'शूद्राश्चपाककर्तारः' इत्यापस्तम्बोक्तम् यत्तु पाककर्तृगोपालादिसच्छूद्रपरामिति, तच्च कलियुगातिरिक्तयुगविषयमिति । यत्तु भविष्यपुराणे—

आवाहनादि कर्तव्यं तथा शूद्रेण तच्छृणु ।
देवानां देवनाम्ना तु पितॄणां नामगोत्रतः ॥
पिण्डांश्च निर्वपेद्वारनामतो गोत्रतस्तथा ।

इति शूद्राणाङ्काश्यपगोत्रमुक्तम् । 'तस्मादाहुः सर्वाः प्रजाः काश्यपः' इति सामान्यदर्शनात्सर्वशूद्राणां काश्यपं गोत्रम् । तस्य च श्राद्धे एवोत्कीर्तनं नान्यत्र 'यावद्वचनं वाचनिकम्' इति न्यायात् । अन्यथा सर्वशूद्राणामेकगोत्रत्वादविवाहः प्रसज्येतेति । अन्ये तु मुख्याशूद्रस्य (?) सत्यर्थान्यतमापत्यत्वाभावाच्छूद्रायामुत्पन्नपारशवो गृह्यत इत्याहुः । युक्तन्तु ब्राह्मणेनोत्पादितः पारशवस्तेन ऊढावदुत्पन्नेन पुनः शूद्रोढेत्येवं सप्तमे शूद्रो भवति । तस्य परम्परया सत्यर्थः । यतमापत्यत्वेन गोत्रसत्त्वात्तत्परमेवेति । वस्तुतस्तु 'तस्मादाहुः सर्वाः प्रजाः' इति तु यस्य नाम्ना ते गोत्रं तद्विषयमेवेति व्यासेनोक्तम् । यत्तु युगस्य पूर्वं पूर्वयुगे कलेः पूर्वभाग इति तन्न पूर्वाणि च तानि युगानि चेति कर्मधारयस्यैवौचित्यात् । द्वापरकल्क्योः सन्धावेव स्मृतीनां प्रवृत्त्या तथार्थस्यैव युक्तत्वाच्चेत्यलं पल्लवितेन । (?) 'अरुक्तं दुरुक्तमिति य आह स गराशी' इति ताण्डिब्राह्मणम् ।

इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृतो व्रात्यताप्रायश्चित्तनिर्णयः समाप्तः ॥

॥ श्रीगणेशाय नमः ॥

# व्रात्यताप्रायश्चित्तनिर्णयः ।

अथ कलौ क्षत्रियपदव्यवहार्याणां दशविंशतिपुरुषपर्य्यन्तं स्मर्यमाणोपनयनाभावानां तदग्रेऽप्यस्मर्यमाणोपनयनानां संस्कारो न वेति सन्देहे निर्णयाय व्रात्यताप्रायश्चित्तनिर्णयः क्रियते।

तत्राऽऽपस्तम्बः-'आषोडशाद्ब्राह्मणस्य नात्यय आद्वाविंशात्क्षत्रियस्याच चतुर्विंशाद्वैश्यस्य'। आङभिविधौ। अत्ययोऽतिक्रमः, प्रकरणादुपनयनस्येति गम्यते। इदं चाऽष्टवर्षत्वादावपि ब्रह्मचर्यव्रतासमर्थान्प्रत्यनुकल्पविधानम्। यथा व्रतेषु समर्थः स्यात्तावत्कालं प्रतीक्षा। पूर्वमेव सामर्थ्ये सति अष्टवर्षाद्यतिक्रमे वक्ष्यमाणं प्रायश्चित्तं कात्यायनोक्तं वा 'कालातिक्रमे नियतवत्' इति। षोडशादूर्ध्वमपि किञ्चित्कालमसमर्थानां पश्चात्सामर्थ्ये प्रायश्चित्तं भवत्येव। तदाह-'अतिक्रान्ते सावित्र्याः काले ऋतुं त्रैविद्यकं ब्रह्मचर्यं चरेत्'। त्रैविद्यकं वेदत्रयसम्बन्धि। अग्निसेवाऽध्ययनगुरुशुश्रूषातिरिक्तं सर्वं ब्रह्मचारिधर्मं कुर्यात्। तच्च ऋतुमिति कालविधानं, तेन ऋत्वारम्भे प्रायश्चित्तारम्भः। एवञ्च प्रतिवेदमृतुमिति ऋतुत्रयं तत्। 'अथोपनयनं, ततः संवत्सरमुदकोपस्पर्शनम्'। उपनयनादारभ्य संवत्सरपर्यन्तं त्रिषवणं स्नानं पावमान्यादिभिरशक्तस्य यथाशक्ति। 'अथाध्याप्य'इति। अत्रैव वसिष्ठोक्तमुद्दालकव्रतं शङ्खोक्तं गोदानसहितं चान्द्रायणं द्रष्टव्यम्। एतयोः सपादनवधेनवः। एवं यममन्वाद्युक्तमपि। अत्रैव विषये शक्त्यशक्तिकालाधिक्यन्यूनत्वालस्यदेशविप्लवोपनेत्रभावादिकृतत्वादिपर्यालोचनीयानि, तानि च मिताक्षरादौ स्पष्टानि। अथ 'यस्य पिता पितामह इत्यनुपेतौ

स्यातां ते ब्रह्महसंस्तुताः' । यस्य माणवकस्य जातावेकवचनम् । माणवकाः ब्रह्महण इत्येवं संस्तुताः कथिताः, तेन ब्रह्महसमी इव तत्समीपेऽध्ययननिषेधः । 'तेषामभ्यागमनं भोजनं विवाह मिति वर्जयेत्' । अभ्यागमनं प्रत्युत्थानादि, स्वरक्षाद्यर्थं तत्समीप गमनं च । भोजनमुद्यतमपि त्याज्यं तस्याऽत्याज्यताया उक्तत्वेऽपि विवाहश्च तादृशकन्याया अपि पुंसश्च वर्ज्यः । 'तेषामिच्छतां प्राय श्चितम्' । तेषां माणवकानाम् । इच्छतामित्यनेन बलात्कारो नेति सूच यति । 'यथा प्रथमेऽतिक्रमे ऋतुरेवं संवत्सरः' । प्रतिवेदं प्रतिपुरुषं च संवत्सर इत्यर्थः । एवं चैकैकस्य ऽब्दं वेदत्रयार्थं ब्रह्मचर्यं, पितर्येवा नुपनीतेऽ ब्दद्वयं, पितामहेऽपि तादृशे त्वब्दत्रयम् ॥

'अथोपनयनं, तत उदकोपस्पर्शनं, प्रतिपुरुषं सङ्ख्याय स वत्सरान्यावन्तोऽनुपेताः स्युः' । यदि पितैवाऽनुपेतस्ततः संवत्सरमे कम् । अथ पितामहोऽपि ततो द्वौ । अथ स्वयमपि यथाकालमनुपे तस्तदा संवत्सरानिति । एतद्व्रतविषयेऽपि योज्यम् । तत्र स्नाने मन्त्रा 'यदन्तिके' इत्यादि सप्त पावमान्यः । 'येन देवाः पवित्रेण' इति यजुष पवित्रम् । 'कया नश्चित्र' इति सामपवित्रम् । 'हंसः शुचिषद्' इत्याङ्गिरस मिति । व्याहृतय एव ताः । अथाध्याप्यः । अत्र यस्येत्युक्तेर्माणवकस्यैव प्रायश्चित्तपूर्वमुपनयनादि न पित्रादेरिति बोध्यम् ॥

'अथ यस्य प्रपितामहादि नानुस्मर्यत उपनयनं ते श्मशानसंस्तु तास्तेषामभ्यागमनं भोजनं विवाहमिति च वर्जयेत्तेषामिच्छतां प्रायश्चित्तं द्वादशवर्षाणि त्रैविद्यकं ब्रह्मचर्यं चरेदथोपनयनं तत उदकोपस्पर्शनं पावमान्यादिभिरथ गृहमेधोपदेशनं नाध्यापनम्' इति । एतच्चेत्थं व्याख्यातमुज्ज्वलायां हरदत्तेन—प्रपितामहादि प्रपिता महादारभ्य प्रपितामहः पितामहः पिता स्वयं यथाकालमनु पेतास्ते श्मशानसदृशा इति तत्सन्निधौ नाध्ययनम् । अत्रापि प्रतिपुरुषं सङ्ख्याय संवत्सरानिति द्रष्टव्यमिति । गृहमेधो गार्ह

स्थ्यम्। कृत्स्नस्य वेदस्य नाध्यापनं गृह्यमन्त्राणां तु भवतीति। अनेन चैकैकस्य प्रतिवेदं द्वादशाब्दामिति षड्त्रिंशदब्दामिति द्रष्टव्यम्। 'ततो यो निर्वर्तते तस्य संस्कारो यथा प्रथमेतिक्रमे त्रैविद्यकं ब्रह्मचर्यं चरेत्'। अथाध्याप्य इत्यर्थः। 'तत ऊर्ध्वं प्रकृतिवत्'। यथाप्राप्तमुपनयनं कार्यमित्यर्थः। एवमेवैषा स्मृतिः पराशरीये माधवेन व्याख्याता। यत्तु 'यस्य प्रपितामहादी'ति सूत्रे प्रपितामहादीनामिति पाठकल्पनं तत्त्वसङ्गतमेव हरदत्तमाधवादिविरोधात्, अध्येतृसम्प्रदायविरोधाच्च। यत्तु केनाचित् ग्रन्थकृता तदनुसारिणऽन्येन च ग्रन्थकृता प्रपितामहादारभ्य विनिगमनाविरहेण पूर्वं अर्वाञ्चश्चेति पूर्वे उत्तरे चेति व्याख्यातम्। अत एवोज्ज्वलायां हरदत्तेनोक्तं–'यस्य प्रपितामहस्य पितुरारभ्य नाऽनुस्मर्यत उपनयनं तत्र प्रायश्चित्तं नोक्तमित्युक्त्वा धर्मशास्त्रैस्तु विहितमेवं पूर्वेषु याति'। तस्यार्थः–धर्मशास्त्रैस्तच्छास्त्रनिबन्धकारैरुक्तरीत्या स्मृतिं व्याख्याय तत्रापि प्रायश्चितं विहितमिति तत्तुच्छं, कात्यायनस्मृतिविरोधात्। तथा हि तेन-'आषोडशाद्ब्राह्मणस्यानतीतः कालो भवति आद्वाविंशाद्राजन्यस्याचतुर्विंशाद्वैश्यस्य, अत ऊर्ध्वं पतितसावित्रिका भवन्ति, नैनानुपनयेयुर्नाध्यापयेयुर्न याजयेयुर्न चैभिर्व्यवहरेयुः' इति। अत ऊर्ध्वमित्यस्य मन्त्रादिविहितप्रायश्चित्तपूर्वकमुपनयनाभाव इति शेषः। पतितसावित्रिका इत्यस्य ते तदपत्यपरम्परा च। तथाऽनुपेता इति शेषः। तादृशेषु सर्वकर्मनिषेधो नैनामित्यादिनोक्तः। तत्रोपनयननिषेधकालाभावप्राप्तोपनयनाभावस्यैवानुवादः, अष्टवर्षादिकालाभावेन तत्राप्राप्तेः। 'अष्टवर्षं ब्राह्मणमुपनयीत' इति श्रुतिवाक्यमिति सुदर्शनकृते आपस्तम्बगृह्यभाष्ये स्पष्टम्। कैश्चिदतिक्रान्तनिषेधैरुपनयनादावपि न तदुत्तराः क्रियाः कार्या इत्यर्थः, नैनानित्यादिना बहुदोषश्रवणात्। अनेकपुरुषाणां पतितसावित्रीकविषयो निषेधः सर्वथा त्याज्यत्वबोधनायोपनयननिषेधेन सिद्धेऽप्यन्यकथनम्। 'तेषामभ्यागमनं विवाहं वर्जये'दित्यापस्तम्बोक्तावित्र। अयमेव कात्यायन-

स्मृतौ व्यवहारपदार्थः । तत आह 'कालातिक्रमे नियतवत्' । गर्भाधाना
द्युपनयनान्तकर्मणां कालातिक्रमे नियतवत् नित्यवत् नित्येषु यद्वि
हितं तद्वदनादिष्टं प्रायश्चित्तं महाव्याहृतिहोमाख्यं सर्वप्रायश्चित्तरू
कृत्वा गर्भाधानाद्युपनयनान्तानि कार्याणि । इदं चाऽष्टवर्षादिरूपमुख्यो
पनयनकालातिक्रमे बोध्यमत्यल्पत्वात् । षोडशादिरूपगौणकालस्या
ऽप्यत्यये तु-'अतिक्रान्ते सावित्र्याः काले' इत्यादिनापस्तम्बाद्यु
द्रष्टव्यम् ॥

अथाऽनेकपुरुषपतितसावित्रीकविषये प्रतिप्रसवमाह-'त्रिपुरु
पतितसावित्रीकाणामपत्ये संस्कारो नाध्यापनं च' । एषामपत्ये चतु
संस्कार उपनयनं भवति अध्यापनं तु नेति तदर्थः । चस्त्वर्थे । प्रपि
तामहमारभ्य चतुर्णां पतितसावित्रीकत्वे तदपत्ये तु न संस्कार
पूर्वनिषेधादिति हरिहरः । 'यस्य प्रपितामहादी'ति सूत्रे 'उपनयनं ना
ध्याप्य' इत्यापस्तम्बोक्त्याऽस्याऽयमेवार्थ उचितः । यत्तु कात्यायनसूत्रव्या
ख्यात्रा गदाधरेण तेषामपत्ये संस्कारो नाध्यापनं च नेत्येतत्सूत्रं व्या
ख्यातं हरिहरस्तु मृग्य इत्युक्तं च, तदेतेन परास्तम्, अन्यथा पूर्वनि
षेधेनैव सिद्धेरस्य वैयर्थ्यापत्तेः । स च बहुदोषश्रवणादापस्तम्बैकवाक्य
तया बहुपुरुषं यावत् पतितसावित्रीकविषयक एव, स नाऽऽद्यातिक्र
मविषय इत्युक्तम् । एवं चैतदेकवाक्यतया 'यस्य प्रपितामहादी'त्यापस्त
म्बस्मृतिरपि त्रिपुरुषं पतितसावित्रीकविषयैव । अत एव धर्मशास्त्रैस्
विहितेऽत्र वाक्ये हरदत्तेन तु नाऽरुचिर्बोधिता । तद्बीजं तूक्तमेव । स्मृ
त्योरेकमूलकल्पनालाघवानुरोधेनैकार्थत्वे सम्भवति भिन्नार्थत्वमन्या
य्यमिति सर्वशास्त्रनिबन्धकृतां सिद्धान्तात् । अभ्युपेत्यापि ब्रूमः
पूर्वे इत्यत्र 'कपिञ्जलाधिकरण'न्यायेन त्रयाणामेव ग्रहणापत्तौ सप्त
मस्योपनयनलाभे तदूर्ध्वस्याऽष्टमादेरुपनयने मानाभावः । किं चाऽ
प्रायश्चित्तविधिर्येषां वंशे उपनयनं स्मर्यते तद्विषय एव, न तु तद
स्मरणे । 'यस्य प्रपितामहादी'ति सूत्रस्थे 'पावमान्यादिभिः स्नातं' ततः

मिति प्रतीके 'प्रतिपुरुषं सङ्ख्याय संवत्सरा'नित्येतदत्रापि द्रष्टव्यमिति हरदत्तोक्तेः । तदस्मरणे तद्गणनासम्भवादिति दिक् ॥

स च चतुर्थस्य संस्कारः कथं कर्तव्यस्तत्राह कात्यायनः–'तेषां संस्कारेप्सुर्व्रात्यस्तोमेनेष्ट्वा' । संस्कारं कुर्यादिति शेषः । तेषां त्रिपुरुषं यावत् पतितसावित्रीकाणां यान्यपत्यानि तेषां मध्ये यः संस्कारेप्सुः संस्कारं प्राप्तुकामः स व्रात्यस्तोमेनोपनेतृद्वारा इष्ट्वा गुरुद्वाराऽऽत्मानं संस्कुर्यादित्यर्थः । तेषां निषिद्धमप्यध्ययनं पुनराह–'काममधीयीरन् व्यवहार्या भवन्तीति वचना'दिति । व्रात्यस्तोमेनेष्ट्वाऽधीयीरन् वेदमिति शेषः । व्रात्यस्तोमेन पतिता अपि व्यवहार्या भवन्ति अध्ययनादिकर्मयोग्या भवन्ति इति वचनात् श्रुतेरित्यर्थः । तथा च गौतमीये–'यथैतदयाज्ययाजनं, अभक्ष्यभक्षणं, अवन्द्यवन्दनं, शिष्टस्याऽक्रिया, प्रतिषिद्धसेवन'मिति पापान्युक्त्वा प्रायश्चित्तं कुर्यात् । 'न कुर्यादिति मीमांसते' न कुर्यादित्याहुः । न हि कर्म क्षीयते कुर्यादित्यपरे । पुनः स्तोमेनेष्ट्वा सवनमायान्तीति विज्ञायते । 'व्रात्यस्तोमैश्चेष्ट्वा तरति सर्वं पाप्मान'मिति पूर्वसूत्रे नाध्यापनं चेत्युक्तेरापस्तम्बसूत्रेऽपि' यस्य प्रपितामहादी'ति उपक्रम्य 'उपनयनं नाध्यापन'मित्यापस्तम्बोक्तेश्च संस्कारमात्रेणाऽध्ययनस्याऽप्युक्तत्वात् । व्रात्यस्तोमेनेष्ट्वेत्यनुवृत्त्या वाक्यभेदेन व्याख्यातः इदृशे विषये व्रात्यस्तोमापस्तम्बोक्तप्रायश्चित्तयोर्विकल्पो बोध्यः । अत्रत्यं हरिहरभाष्यमपि पोषपूरणयैव व्याख्येयम् । एवं च तादृशक्षत्रियाणामुपनयनाभावः सिद्धः ॥

वस्तुतः कलावुपनयनयोग्यक्षत्रियाभाव एव । तथा च चतुर्थेऽशे विष्णुपुराणे—

> यावत्परीक्षितो जन्म यावन्नन्दाभिषेचनम् ।
> एतद्वर्षसहस्रं तु कलौ पञ्चदशोत्तरम् ॥

महानन्दिनः शूद्रायामुत्पन्नो नन्दाख्यः सकलक्षत्रजात्यन्तकारी, ततःप्रभृति शूद्रा भूमिपाला भविष्यन्ति ।

देवापिः पौरवो राजा मरुश्चेक्ष्वाकुसम्भवः ।
महायोगबलोपेतौ कलापग्रामसंश्रयौ ॥
कृते युगे समागत्य क्षत्रप्रावर्तकौ हि तौ ।
भविष्यतो मनोर्वंशे बीजभूतौ व्यवस्थितौ ॥
एतेन क्रमयोगेन मनुपुत्रैर्वसुन्धरा ।
कृतत्रेतादिसंज्ञानि युगानि त्रीणि भुज्यते ॥

अत्र त्रीणि भुज्यते इत्यनेन तुर्ये कलौ पञ्चदशोत्तरसहस्रक्षत्यल्पकालं तत्सत्ता सूच्यते ।

कलौ तु बीजभूतास्ते केचित्तिष्ठन्ति भूतले ।
यथैव देवापिमरू सांप्रतं समवस्थितौ ॥ इति ।
ब्रह्मक्षत्रस्य या योनिर्वंशो राजर्षिसत्कृतः ।
क्षेमकं प्राप्य राजानं स संस्थां प्राप्स्यते कलौ ॥
इक्ष्वाकूणामयं वंशः सुमित्रान्तो भविष्यति । इति च ।

इमौ च नन्दराज्यात् पञ्चशतवर्षतः पूर्वमित्यपि तत्रैव स्पष्टमित्यमत्सरैर्धर्मविरोधं परिहाय विचार्यमित्यलम् ॥

इति व्रात्यताप्रायाश्चित्तनिर्णयः समाप्तः ॥

श्रीगणेशाय नमः ।

# व्रात्यताशुद्धिसङ्ग्रहः ।

व्रात्यताशुद्धिरखिलस्मृतिवाचां विवेचनात् ।
सर्वविद्वज्जनमुदे यथामति निरूप्यते ॥ १ ॥

'आषोडशाद्वर्षात् ब्राह्मणस्य नातीतः कालो भवत्याद्वाविंशाद्राजन्यस्याचतुर्विंशाद्वैश्यस्याऽत ऊर्ध्वं पतितसावित्रीका भवन्ति नैनानुपनयेयुर्नाध्यापयेयुर्न याजयेयुर्न चैभिर्व्यवहरेयुः । कालातिक्रमे नियतवत्त्रिपुरुषं पतितसावित्रीकाणामपत्येऽसंस्कारो नाध्यापनञ्च । तेषां संस्कारेप्सुर्व्रात्यस्तोमेनेष्ट्वा काममधीयीरन् व्यवहार्या भवन्तीति वचनात्' इति पारस्करसूत्रे ॥

अथापस्तम्बधर्मसूत्रम्—'आषोडशाद्ब्राह्मणस्यानात्यय आद्वाविंशात्क्षत्रियस्याचतुर्विंशाद्वैश्यस्य यथा व्रतेषु समर्थः स्यात्तानि वक्ष्यामः' । अतिक्रान्ते सावित्र्याः काले ऋतुं त्रैविद्यकं ब्रह्मचर्यञ्चरेत् । अथोपनयनम् । ततः संवत्सरमुदकोपस्पर्शनम् । अथाध्याप्यः । अथ यस्य पितापितामह इत्यनुपेतौ स्यातान्ते ब्रह्महसंस्तुताः, तेषामभ्यागमनम्भोजनं विवाहमिति वर्जयेत् । तेषामिच्छताम्प्रायश्चितम् । यथा प्रथमेऽतिक्रमे ऋतुरेवं वत्सरः । अथोपनयनम् । तत उदकोपस्पर्शनं प्रतिपुरुषं संख्याय संवत्सरान् यावन्तोऽनुपेताः स्युः सप्तभिः पावमानीभिः 'यदन्ति यच्च दूरके' इत्येताभिर्यजुःपवित्रेण सामपवित्रेणाङ्गिरसेनेति । अपि वा व्याहृतिभिः । अथाध्याप्यः । अथ यस्य प्रपितामहादीनां नाऽनुस्मर्यत उपनयनं ते श्मशानसंस्तुताः । तेषामभ्यागमनम्भोजनं विवाहमिति च वर्जयेत् । तेषामिच्छताम्प्रायश्चित्तं द्वादशवर्षाणि त्रैविद्यकं ब्रह्मचर्यञ्चरेत् । अथोपनयनम् । तत उदकोपस्पर्शनं पावमान्या-

दिभिः । अथ गृहमेधोपदेशनं नाध्यापनम्, ततो यो निर्वर्तते त
संस्कारो यथा प्रथमेऽतिक्रमे । तत ऊर्ध्वं प्रकृतिवदिति ॥

याज्ञवल्क्ये प्रथमेऽध्याये ब्रह्मचर्यप्रकरणे—

आषोडशाद्द्वाविंशाच्चतुर्विंशाच्च वत्सरात् ।
ब्रह्मक्षत्त्रविशाङ्काल औपनायनिकः स्मृतः ॥
अत ऊर्ध्वं पतन्त्येते सर्वधर्मबहिष्कृताः ।
सावित्रीपतिता व्रात्या व्रात्यस्तोमादृते क्रतोः ॥ इति ।

मनौ द्वितीयाध्याये—

अषोडशाद्ब्राह्मणस्य सावित्री नातिवर्तते ।
आद्वाविंशात्क्षत्त्रबन्धोराचतुर्विंशतेर्विशः ॥
अत ऊर्ध्वं त्रयोऽप्येते यथाकालमसंस्कृताः ।
सावित्रीपतिता व्रात्या भवन्त्यार्यविगर्हिताः ॥
नैतैरपूतैर्विधिवदापद्यपि हि कर्हिचित् ।
ब्राह्मान् यौनांश्च सम्बन्धानाचरेद्ब्राह्मणः सह ॥ इति ।

यमः—

सावित्री पतिता यस्य दश वर्षाणि पञ्च च ।
सशिखं वपनङ्कृत्वा व्रतङ्कुर्यात्समाहितः ॥
एकविंशतिरात्रञ्च पिबेत्प्रसृतियावकम् ।
हविषा भोजयेच्चैव ब्राह्मणान् सप्त पञ्च च ॥
ततो यावकशुद्धस्य तस्योपनयनं स्मृतम् । इति ।

वसिष्ठः—'पतितसावित्रीक उद्दालकव्रतञ्चरेत् । द्वौ मासौ य
वकेन वर्तयेत्, मासं पयसा, पक्षमामिक्षया, अष्टरात्रं घृतेन, ष
रात्रमयाचितेन, त्रिरात्रमब्भक्षोऽहोरात्रमुपवसेत् । अश्वमेधावभृथ
च्छेत् । व्रात्यस्तोमेन वा यजेद्वा यजेत्' इति ॥

मनावेकादशे—

येषां द्विजानां सावित्री नानूच्येत यथाविधि ।
तांश्चारयित्वा त्रीन् कृच्छ्रान्यथाविध्युपनाययेत् ॥ इति ।

अत्राषोडशादित्याङ् यदि मर्यादायान्तर्हि षोडशमारभ्य पतितसावित्रीकत्वं, यद्यभिविधौ तर्हि सप्तदशमारभ्य तत्संपद्यते। तत्र यमवचने 'दश वर्षाणि पञ्च च' इति निर्देशात्—आषोडशादित्यादौ मर्यादैवाङोच्यते नाभिविधिरिति केचित्। परे तु यमवचनमिदन्न पतितसावित्रीकप्रायश्चित्तपरं येनाऽऽषोडशादित्यादावाङ् मर्यादायां स्यात्। किन्तु यथाकालमुपनीतस्य तदूर्ध्वङ्गृहितामापन्नस्यानापन्नस्य वा दैवान्मानुषाद्वाऽपराधात् पञ्चदशवर्षपर्यन्तं सावित्री पतिता यस्य सन्ध्यावन्दनादित्यागो यस्य तस्येदं यावकव्रतं पुनरुपनयनञ्च। अत्र पतितसावित्रीक इति समासानादरात्। 'अष्टवर्षं ब्राह्मणमुपनयीत, एकादशे राजन्यम्, द्वादशे वैश्यम्' इति निर्देशात्। मुख्यकालाद्द्विगुणकालपर्यन्तङ्गौणकालत्वनिरूपणात्। तत्राऽऽवश्याङ एव प्रतीतेर्मर्यादार्थकत्वाप्रतीतेश्च। तथा च षोडशादिवर्षोर्ध्वं पतितसावित्रीकत्वं भवतीत्यर्थः। नैनानिति निन्दार्थवादाः। कालातिक्रम इत्यादि प्रायश्चित्तपरम्। कालातिक्रमे सञ्जातोपनयनसंस्कारस्य गृहिणोऽगृहिणो वा सन्ध्यावन्दनादीनां बहुकालमतिक्रमे सति नियतवत्स्मृतिषु नियतं नियमितं प्रायश्चित्तमिव कृतेऽपि प्रायश्चित्तम्। तत्र यमवचनं पञ्चदशवर्षपर्यन्तं सावित्र्या उपनयनात्सरप्रवृत्ताया लोपे यावकव्रतोपनयनपरम्, तथैवेहापि पतितसावित्रीकस्य बालकस्योपनयनं यावकव्रतपूर्वकं विज्ञेयम्। एवं पितुरप्यनुपनयने त्रिगुणं यावकव्रतङ्कार्यम्। पितामहस्याप्यनुपनयने षड्गुणं यावकव्रतङ्कार्यम्। केवलयावकव्रतस्य बालकगतस्यैकर्तुब्रह्मचर्यसमत्वात्। तस्य चैकर्तुब्रह्मचर्यस्य 'यस्य पिता पितामह इत्यनुपेतौ स्याताम्' इत्युपक्रम्य 'यथा प्रथमे ऋतुरेवं वत्सरः' इति एकर्तुव्रतस्य षाड्गुण्यविधानेन यावकव्रतस्यापि षाड्गुण्यौचित्यात्। एवञ्च कालातिक्रम इति सूत्रं बालकस्यैकस्य तस्य पितुश्च द्वयोस्तयोः पितामहस्य च त्रयाणां पतितसावित्रीकत्वप्रायश्चित्तपरम्। यद्यथाऽऽषोडशादि-

त्युपक्रम्याऽत ऊर्ध्वमित्यनेन बालकस्यैव पतितसावित्रीकत्वमित्युक्त कालातिक्रम इति सूत्रं पठितं बालकस्यैव पतितसावित्रीकत्वप्रा यश्चित्तपरं भवितुमर्हति, तथापि त्रिपुरुषं पतितसावित्रीकाणामिति त्रिपुरुषपतितसावित्रीकापत्यप्रायश्चित्तविधानेन प्रथमप्रायश्चित्तं पु रुषत्रयसाधारणत्वेनैव नेतुमुचितमिति दिक् ॥

अपरे तु कालातिक्रमे नियतवन्नियते नित्ये कालातिक्रमे व्याहृति होमः प्रसिद्धस्तद्वत्तेन तुल्यं व्याहृतिहोमात्मकं प्रायश्चित्तम्भवति तच्च प्रायश्चित्तमेकर्तुब्रह्मचर्योद्दालकव्रतयावकव्रतसाम्यसम्पत्ते उद्दालकव्रतप्रत्याम्नायत्वेन चतुर्दशप्राजापत्यनिर्णयात् । तथैव सह स्रव्याहृतितिलहोमस्यैकप्राजापत्यतुल्यत्वाच्चतुर्दशसहस्रव्याहृतिहो मः कालातिक्रमे बालकस्य प्रायश्चित्तरूप इति पितृपितामहयोरपि पतितसावित्रीकत्वे चतुर्दशषड्गुणाश्चतुरशीतिसहस्रव्याहृतिहोमा प्रायश्चित्तरूपा बालकपित्रोरुभयोरेव पतितसावित्रीकत्वे द्विचत्वारिं शत्सहस्रव्याहृतिहोमा भवेयुः प्रायश्चित्तरूपा इति विवेचयाम्बभूवुः ।

याज्ञवल्क्ये—

उपपातकशुद्धिः स्यादेवं चान्द्रायणेन वा ।
पयसा वापि मासेन पराकेणाऽथवा पुनः ॥

मनौ—

एतदेव व्रतङ्कुर्युरुपपातकिनो द्विजाः ।
अवकीर्णिवर्जं शुद्ध्यर्थं चान्द्रायणमथापि वा ॥

एवङ्गोवधप्रायश्चित्तेनेत्यर्थः । पतितसावित्रीकताया उपपातकरू पत्वेन स्मर्तृभिः पापगणनादुपपातकशोधकानि यानि कर्माणि प्रसि द्धानि तानि सर्वाण्यपि यथायोगं सङ्ग्रहीतुमेव कालातिक्रमे यो ग्यतयोपपातके कालातिक्रमोपलक्षिते व्रात्यत्वे नियतवन्नियतेनोप पातकनिवृत्तिनियतेन प्रायश्चित्तेन तुल्यं प्रायश्चित्तं विधेयमिति बहु विधवैकल्पिकप्रायश्चित्तपरिग्रहाय 'कालातिक्रमे नियतवत्' इति सामान्यात्मना सूत्रं रचितमिति दिक् ॥

अथ कालातिक्रमे नियतवदिति पुरुषत्रयपर्यन्तमपि वृद्धिक्रमेण पतितसावित्रीकत्वे प्रायश्चित्तपरम्। तत्प्रायश्चित्तं वृद्धिमत् त्रिपुरुषादूर्ध्वं पतितसावित्रीकत्वे भवेदपि, परन्तु तेन प्रायश्चित्तेनोपनयनसंस्कारेऽपि नैवाध्यापनमधिकप्रायश्चित्तं विना, किन्तु व्रात्यस्तोमेनेत्याह-त्रिपुरुषमिति। संस्कारो नोपनयनलक्षणोऽध्यापनञ्च नेत्यन्वयः। तेषां पुरुषाणां त्रयाणां पुत्रस्य च चतुर्णां मध्ये कोऽपि जनः व्रात्यस्तोमेनेष्ट्वा संस्कारेप्सुरुपनयनसंस्कारेप्सुर्भवेत्। व्रात्यस्तोमं विना नियतवदिति प्रायश्चित्तेन वर्द्धितेन संस्कारेऽप्यधिकप्रायश्चित्तं विना नाध्यापनेच्छुर्भवेदिति यावत्। तत्र प्रमाणमाह—'काममधीयीरन् व्यवहार्या भवन्तीति वचनात्' इति। काममधीयीरन्नित्यर्थपरं ताण्ड्यब्राह्मणवचनात्। ताण्ड्यब्राह्मणे ईदृग्वचनाभावेनैतदर्थस्य तत्रार्थसिद्धत्वेनैतदर्थपरवचनादित्येव व्याख्यातुमुचितत्वात्। 'तैरिष्ट्वा त्रैविद्यवृत्तिं समातिष्ठेयुः, तेषां तत ऊर्ध्वं भुञ्जीत याजयेच्चैनान्' इति छन्दोगसूत्रात्। 'व्रात्यस्तोमेनेष्ट्वा व्रात्यभावाद्विरमेयुर्व्यवहार्या भवन्ति' इति कात्यायनसूत्रात्। एवञ्च व्रात्यस्तोमोऽतिविशिष्टत्वात्प्रबलैनोनिबर्हको भवति प्रबलपातकनिवर्तकस्य क्षुद्रपातकनिवर्तकत्वं साहजिकमिति याज्ञवल्क्येन प्रथमादिव्रात्यतायामपि निवर्तकत्वेन व्रात्यस्तोमो निबद्धो 'व्रात्यस्तोमाद्दृते क्रतो'रिति। व्रात्यस्तोमं विना सर्वधर्मबहिष्कृताः सावित्रीपतिता व्रात्याः। व्रात्यस्तोमे कृते सति सर्वधर्माधिकारिणो निष्पापाः शुद्धा इति तदाशयात्। अत्र त्रिपुरुषं पतितसावित्रीकापत्यत्वं व्रात्यस्तोमे निमित्तं तत्र त्रिपुरुषाधिकपतितसवित्रीकत्वेऽपि सहस्रे शतमितिवत्त्रिपुरुषपतितसावित्रीकापत्यत्वं भवेदेवेति चतुरादीनां पतितसावित्रीकत्वेऽपि व्रात्यस्तोमानुष्ठानं भवतीति 'ऐन्द्राग्नं पुनरुत्सृष्टमालभेत य आतृतीयात्सोमं न पिबेत्' इति वाक्यविचारावसरे निरूपयिष्यामः-इति पारस्करसूत्रयोजना॥

अथाऽऽपस्तम्बसूत्रयोजना वर्णविभागेन विहितमुख्यकालात् 'अष्ट-

